नक्षत्रशान्तिस्तोत्रम्
कृत्तिका परमा देवी रोहिणी रुचिरानना ॥ १॥

श्रीमान् मृगशिरा भद्रा आर्द्रा च परमोज्ज्वला ।
पुनर्वसुस्तथा पुष्य आश्लेषाऽथ महाबला ॥ २॥

नक्षत्रमातरो ह्येताः प्रभामालाविभूषिताः ।
महादेवाऽर्चने शक्ता महादेवाऽनुभाविताः ॥ ३॥

पूर्वभागे स्थिता ह्येताः शान्तिं कुर्वन्तु मे सदा ।
मघा सर्वगुणोपेता पूर्वा चैव तु फाल्गुनी ॥ ४॥

उत्तरा फाल्गुनी श्रेष्ठा हस्ता चित्रा तथोत्तमा ।
स्वाती विशाखा वरदा दक्षिणस्थानसंस्थिताः ॥ ५॥

अर्चयन्ति सदाकालं देवं त्रिभुवनेश्वरम् ।
नक्षत्रमारो ह्येतास्तेजसापरिभूषिताः ॥ ६॥

ममाऽपि शान्तिकं नित्यं कुर्वन्तु शिवचोदिताः ।
अनुराधा तथा ज्येष्ठा मूलमृद्धिबलान्वितम् ॥ ७॥ var मूला ऋद्धिबलान्वितता

पूर्वाषाढा महावीर्या आषाढा चोत्तरा शुभा ।
अभिजिन्नाम नक्षत्रं श्रवणः परमोज्ज्वलः ॥ ८॥

एताः पश्चिमतो दीप्ता राजन्ते राजमूर्तयः ।
ईशानं पूजयन्त्येताः सर्वकालं शुभाऽन्विताः ॥ ९॥

मम शान्तिं प्रकुर्वन्तु विभूतिभिः समन्विताः ।
धनिष्ठा शतभिषा च पूर्वाभाद्रपदा तथा ॥ १०॥

उत्तराभाद्ररेवत्यावश्विनी च महर्धिका ।
भरणी च महावीर्या नित्यमुत्तरतः स्थिताः ॥ ११॥

शिवार्चनपरा नित्यं शिवध्यानैकमानसाः ।
शान्तिं कुर्वन्तु मे नित्यं सर्वकालं शुभोदयाः ॥ १२॥

इति नक्षत्रशान्तिस्तोत्रं सम्पूर्णम् ।